अथ अवर्णिप्रकरणम् ५

अवर्णिन्यनुक्तं समोप्यातिरक्तं परित्यज्य
दुष्कीर्तितञ्चाभिवीक्ष्य
ककारादि वर्णक्रमेणाहमेतां सुवृत्तिं करिष्यामि
विस्पष्टवाच्याम् १
ओदेदवर्णसंछन्नम् संहितायां पदादिगम्
अवर्णं ज्ञातुमस्माभिः इदं शास्त्रं प्रणीयते २
नोदात्तो यः पदाध्याय उदात्तस्संहितागमे
यश्चोदात्तः पदाध्याये स्वरितस्संहितागमे ३
अघोषाक्षरतः पूर्वः ओकारस्सांहितश्च यः
तेभ्यः परः पदाध्याये त्वकारस्स्यात्पदादिगः ४
संयोगादिगतो रेफो यश्छकारपरो न तु
संयोगाद्युत्तमो यश्च पदस्थस्स्वरितो न तु
यश्चानुस्वार एतेभ्योऽकारः पूर्वः पदादिगः ५
अष्टासुराक्षराग्न्यग्र मध्योदात्ताश्विनश्श्रुतिः
अरण्यारुणशब्दौ च न स्वारान्तोऽदितिश्रुतिः ६
अश्वशब्दो न विच्छ्वोन्तोऽमृतशब्दो न यान्तकः ७
कृन्ततेनाचपूर्वस्तु तत्राकारो न विद्यते
अध्वर्युशब्दश्चेत्येते श्रुत्यैवाकारपूर्वकाः ८
यद्यद्वत्वत इत्यत्र परपक्षगतं पदम्

तत्तत्सर्वमकारादि जननायेति वर्जयेत् ९
उपसर्गेङ्ग्यपूर्वोऽकरक्तमक्रानकुर्वत
अकूपारस्य चाकुर्वन्नकर्णा उत्तरं तथा १०
अकामयन्ताक्रमिषमकामयत चाकरम्
अकृष्टपच्यं पाश्चात्यं अक्रंस्ताक्षन्नथाक्ष्णया ११
अक्षीभ्यामगुरागाश्चाप्यगाच्च न परापरम्
अगन्तागच्छदगममगृहीता अगन्म च १२
अगृह्णादगथा अघ्नन्नगच्छन्नप्यघारयत्
अघावग्रहवर्ति स्यात् अचरच्चाच्छिनत्तथा १३
अच्छिद्यमानयाजोऽजन्यजक्षीरे भवेदजेत्
अजायन्ताप्यजातश्च नोदात्तान्तोऽजिहीत च १४
तोऽजायामजयन्ताजाप्यजस्रोऽपि तथाऽजयन्न्
न युधापदपूर्वञ्चेत् अणिष्ठा अत्रिमत्यपि १५
अत्रातिष्ठदतीकाशादत्रीरद्भ्योऽद्भिरप्यथो
अथाददाददधत तथादब्धाप्यदन्तकः १६
अदाददतादाभ्यमद्याद्द□हन्नदत्ततत्
अदस्यन्नध्वनोदायोदधुरध्रियतादुहत् १७
अदित्सन्ताप्यध्यधममधिताधादधा इति
आ रेतोऽधत्त मेऽधायि त्वधस्तादप्यनुष्ठुया १८
क्रन्दनोऽनिमिषोऽनाप्तमनमित्रमनक्ति च

अनक्तु च तथा प्रोक्तमनशन्यपि कीर्तितम् १९
अनीकेनानायतना अनड्वाहोनयानृतम्
अनु नोदात्तमन्वक्चाप्यनोवाहौ तथानयोः २०
अनवावग्रहोऽनड्वाननिर्दिष्टाऽनपाऽपथात्
अपिबच्चापतन्नप्राः अन्तोदात्तमपस्तथा २१
अपोनप्त्रीयमप्राप्य चाप्स्वपूपमपाप्यपाम्
अपश्यदपराभ्याञ्चापश्यन्नप्रथतापसा २२
अपरापतदप्रीणीताबाधन्ताबिभेदपि
अब्रवीच्चाबिभरुश्चाप्यब्रुवन्नभवन्नभि २३
अभिप्रयाय्यभागानि त्वभूवन्नपरापरम्
अभरन्नभरच्चाभूदभिमात्यभितोऽभवत् २४
अभावयन्नभूवंश्चाप्यभ्रिश्च अशिक्षन्तदंशक्नुवनामुममीव च
अमूममन्यतामुष्मिन्नमित्रानप्यमूस्तथा २५
अमुह्यन्नप्यमुष्माच्चामुष्यां चामात्यइत्यपि
अमन्यन्ताप्यमुष्मै चामेध्यावग्रहवर्त्यमा २६
अयाशयाप्ययःस्थूणावयजन्तायनाय च
अयन्नोदात्तं मेऽयक्ष्ममयाजयदयाम च २७
व्योयुक्तोऽयानि न स्वारान्तोऽयानामयुताय च
अयातयामाह्ययातयाम्नियायाडयस्मयम् २८
अयत्ययमयज्ञो वा अतिभूमिरिति त्रिषु

निष्क्रीतो जायते शास्ते प्रजाभ्यो नस्तमस्त्वया २९
हूतो राज्ञो जर्हृषाणो राजाविन्नश्च मा मुचे
गच्छते चिनुते स्वाहेत्येतेभ्यः परमप्ययम् ३०
तस्मात्परं कामयेत द्विष्यादिति च नत्वयम्
अरोऽरथेभ्यः प्रथममरातीयत्यरानरिम् ३१
अरिष्यत्यररुश्चाराध्यरुहं चाप्यरेणवः
तथारमतचारोहन्नरथा अप्यलोमका ३२
अलभन्त तथालं चालभताप्यवमावतु
अवन्तु चाववृत्रंश्च दावन्द्रासोऽवृकास्तथा ३३
अविद्वान्मेऽवधीश्चाविमुच्यमानोऽप्यवोचथाः
अवहश्चाप्यवट्याभ्योऽविन्दतावृणतावृहत् ३४
अवतेन्द्रोऽवृणीतावाप्यवर्तिमवरैरपि
अवस्युरवसेनावाङ्वत्यप्ययपरापरम् ३५
अजावयस्त्ववार्येभ्योऽप्यवटेष्ववरेतताः
अवृञ्जतावदच्चाविमवमोवर्ततावसत् ३६
अवर्ष्याभ्यश्च पाश्चात्यमवारेऽविरवाकया
अविध्यदव्यथमानावृकेभिरविता तथा ३७
अवत्तरमशीयाश्रिरशीत्यै चाशयत्तथा
अशीताप्यष्ट्वषाढाश्चाष्ठीवदस्यसृजत्तथा ३८
असन्नोदात्तमसददसितोऽसिचदासदः

अस्कान् सहासनोदस्मिन्नस्यस्वासादयन्नसौ ३९
अस्यन्त्यस्तुवतास्थेङ्ग्येऽस्थन्नस्मे चास्तमस्ति च
अस्मै चास्थान्यसीदच्चास्मानस्यां निहतो न तु ४०
अस्याऽहिरहभूनोऽहन्नहुतादोऽहरन्नहः
अहरच्चाहरन्ताहारहार्षम् चाहुतादहम्
अहास्था अहरताञ्चेत्युक्तो ह्रस्वस्य संग्रहः ४१
इति अवर्णिप्रकरणम् ५